# गर्भरक्षणस्तोत्रम्

एह्यहि भगवन् ब्रह्मन् प्रजाकर्तः प्रजापते ।
प्रगृह्णीष्व बलिं सैमं  सापत्यं रक्ष गर्भिणीम् ॥ १॥

अश्विनौ देवदेवेशौ प्रगृह्णीधन् बलिं त्विमम् ।
सापत्यं गर्भिणीं सैमं स रक्षतां पूजयानया ॥ २॥

रुद्रेशा एकादश प्रोक्ताः प्रगृह्णन्तु बलिं त्विमम् ।
यक्षागमप्रीतये वृत्तं नित्यं रक्षन्तु गर्भिणीम् ॥ ३॥

आदित्या द्वादश प्रोक्ताः प्रगृह्णीध्वं बलिं त्विमाम् ।
अस्माकं तेजसां वृद्ध्यै नित्यं रक्षतु गर्भिणीम् ॥ ४॥

विनायक गणाध्यक्ष शिवपुत्र महाबल ।
प्रगृह्णीष्व बलिं सैमं सापत्यं रक्ष गर्भिणीम् ॥ ५ ॥

स्कन्द षण्मुख देवेश पुत्रप्रीतिविवर्धन ।
प्रगृह्णीष्व बलिं सैमं सापत्यं रक्ष गर्भिणीम् ॥ ६॥

प्रभासः प्रभवश्यामः प्रत्यासौ मारुतोऽनलः ।
ध्रुवाधर धराशैव वसवेष्टौ प्रकीर्तितः ।
प्रगृह्णीष्व बलिं सैमं नित्यं रक्षतु गर्भिणीम् ॥ ७॥

पितृदेवि पितृश्रेष्ठे बहुपुत्रि महाबले ।
बुधश्रेष्ठे निशावासे निवृत्ते शौनकप्रिये ।
प्रगृह्णीष्व बलिं सैमं सापत्यं रक्ष गर्भिणीम् ॥ ८॥

रक्ष रक्ष महादेव भक्तानुग्रहकारक ।
पक्षिवाहन गोविन्द सापत्यं रक्ष गर्भिणीम् ॥ ९॥